जोत्कारं रणसिंहोऽपि; पूज्यत्वाच्छ्वशुरस्य हि। करोति विनयोपेतो, ललाटघटिताञ्जलिः ॥ ३५० ॥
स्थैर्यसौन्दर्यचातुर्यौ,—दार्यगाम्भीर्यविक्रमान्। कुलादीं स्तद्गुणान् मत्वा, तुष्टः पृष्टौ करं ददौ ॥ ३५१ ॥
ततो महोत्सवेऽतुच्छे, पर्यणायि शुभेऽहनि। भूपेन कमलवती, रणसिंहस्य धीमतः ॥ ३५२ ॥
भोगभङ्गीं तया सार्द्धं, भुञ्जानः सिंहभूपतिः। कतिचिद्दिनानि तत्राऽऽस्थ, स्वभुजोर्जितवीर्यभृत् ॥ ३५३ ॥
ततः प्रस्थाय मार्गस्थ,—भूपक्लृप्तोपढौकनम्। सङ्गृह्णन् कौतुकालोकं, कुर्वन्नागात्स्ववेश्मनि ॥ ३५४ ॥
रत्नवत्या विवाहार्थं, प्रस्थितोऽपि पुरात्पुरा। सोमापुर्यां समागच्छ,—न्नन्तरा निपुणो नृपः ॥ ३५५ ॥
लाभेन कमलवत्याः, स्वं कृतार्थममन्यत। यतो लाभेन हृष्यन्ति, देवदानवमानवाः ॥ ३५६ ॥
विषयासक्तयोर्नूनं, भोगभङ्गीभुजङ्गयोः। व्यापारो राजकार्यस्य, प्रत्यूहवद्भूत्तयोः ॥ ३५७ ॥
अथ सा रत्नवती च, चिन्तयामास चेतसि। सौभाग्यभाग्यभूः प्राण,—प्रियो राजसुतः सतु ॥ ३५८ ॥
किमर्द्धपथमागत्य, व्यावृत्य स्वपुरं प्रति। शकुनाभावतो यद्वा, ययौ वा मदभाग्यतः ॥ ३५९ ॥ युग्मम् ॥
आज्ञातमतिगम्भीर,—धीमत्या योषिता कया। वशीकृतः कटाक्षेणा--ऽऽमूलमन्त्रेण सोऽध्वनि ॥ ३६० ॥

अथ तस्या यदुण्डत्वं, पातयाम्युत्तमाङ्गके। तस्या एवेति मात्रा दी,—नापृच्छ्याकार्यं मूषिकाम् ॥ ३६१ ॥
तद्दुःख दुःखितस्वान्ता, तीव्रसन्तापतापिता। कथयामास साहृत्स्थं, वृत्तान्तं गन्धमूषिकाम् ॥ ३६२ ॥
ततो मूषिकयाऽवादि, चिन्तां पुत्रि किं मा कुरु। मन्मन्त्रास्त्र प्रयोगो हि, दुस्साध्यार्थस्य साधकः ॥ ३६३ ॥
इत्युदित्वा राजगेहा,—न्निरगात्कूटनाटिका। अचिरेणैव कालेन, संप्राप्ता सिंहपत्तनम् ॥ ३६४ ॥
भागिनेयी कमलवती, तस्या इत्येति याति सा। कुमारान्तः पुरस्यैव,—मभ्यर्णे प्रतिवासरम् ॥ ३६५ ॥
नव्यनव्यकथाख्यानै,--र्गाथाप्रश्नोत्तरादिभिः। अपूर्वं श्लोककाव्यैश्च, रञ्जयामास सा तकाम् ॥ ३६६ ॥
विश्वासपाशपतितो, मुग्धमार्गो यथाऽखिलम्। सुखेन वञ्च्यते तद्व,—न्नृपः सान्तःपुरस्तथा ॥ ३६७ ॥
कुटिलात्मा भुजङ्गीव, पापधीर्गन्धमूषिका। मन्त्र तन्त्रप्रयोगैस्तौ, वशीचक्रे च दम्पती ॥ ३६८ ॥
ज्ञात्वा वश्यं राजलोकं, यत्तत्कथनकारकम्। ततो निशीथसमये, शुद्धान्ताभ्यर्णसंस्थिता ॥ ३६९ ॥
गेहे कमलवत्याश्च, भृत्यव्यापारयोगतः। कूटेनैवापरनर,--प्रवेशोऽदर्शि भूपतेः ॥ ३७० ॥
शीलालङ्कारशालिन्यां, तस्यां सत्याः शिरोमणौ। कलङ्कविपलेशोऽपि, चन्द्रमुख्यां न विद्यते ॥ ३७१ ॥

प्रतीच्यामुदयं याति, रविश्चेच्चन्द्रतो यदि । जायते वह्निवृष्टिश्च,-त्तरेदब्धौ सुराचलः ॥ ३७२ ॥

कदाचिद् दैवयोगेना-ऽथवा दैवानुभावतः । एतदपि भवेन्नूनं नत्वस्याः शीललाञ्छनम् ॥ ३७३ ॥

ज्ञाततच्छीलमाहात्म्यो, रणसिंहनरेश्वरः । तद्वचो नैव मन्येत, तृणवदपमानितम् ॥ ३७४ ॥

तत्परं तन्मनोऽत्यन्तं, सा विज्ञाय दुराशया । स्वकृतं विफलं मत्वोऽ--पायान्तरमथो न्यधात् ॥ ३७५ ॥

मायाप्रपञ्चं तन्वन्ती, पुनः प्राह नृपं प्रति । धिग् धिग् मे लोचने यच्चा,-न्यनरागमदर्शिनी ॥ ३७६ ॥

अथ मे देहि विवरं, देवि ! दिव्ये वसुन्धरे । प्रविशामि यथा नैव, शृणोमि श्रुतिदुःखदम् ॥ ३७७ ॥

भागिनेय्या अनार्याया,-ईदृशं दुर्विचेष्टितम् । इति श्रुत्वा नृपो दध्यौ, किं पीयूषे विषं भवेत् ? ॥ ३७८ ॥

तथापि भूपतिर्नैव, प्रत्येत्येतत्प्रजल्पितम् । तयोर्विद्वेषणकृते, सावधाना ततोऽभवत् ॥ ३७९ ॥

मूलिकामन्त्रतन्त्रौघ,-योगचूर्णप्रयोगकान्, सा प्रायुङ्क्तान्नपानेषु, ताम्बूलेषु विशेषतः ॥ ३८० ॥

तेषां प्रभावात्तच्चित्त,-स्तन्नेत्रोऽपि नराधिपः, वश्योपि तत्कथालापे, ज्वलति ज्वलदग्निवत् ॥ ३८१ ॥

ततश्चिन्ताप्रपन्नोऽभूद्, भूपालः करवाणि किम् ? किं त्यजामि वने एनां, किं वा देशान्तरं ददे ॥ ३८२ ॥

राज्यलक्ष्मीपरिभ्रष्टां, करोमि किं पितुर्गृहे। जहामि वा श्मशाने वा, विद्वेषण प्रभावतः ॥ ३८३ ॥ युग्मम् ॥

प्रत्ययाप्तं नरं कञ्चि,-दाकार्यैकान्तमादिशत्। कृत्वा राज्ञीं रथारूढां, कानने त्वं परित्यज ॥ ३८४ ॥

शिक्षामिवाज्ञां भूपस्य, प्रतीछ्य विनयेन वै। भुजिष्यः सुभगो नाम, सज्जीकृत्य रथं ततः ॥ ३८५ ॥

स्वामिनीं निकषाऽऽगत्य, भृत्यः प्रोवाच तां प्रति। राजेत्याज्ञापयन्नस्ति, गन्तव्यं कानने त्वया ॥ ३८६ ॥

इतश्चावसरे तस्याः, सव्याक्षं स्फुरितं त्वरा। ज्ञातं मारणपर्यन्तोपसर्गः समुपस्थितः ॥ ३८७ ॥

तथापि मे नृपाज्ञैव, प्रमाणं कुलयोषितः। तच्छासनं प्रकुर्वन्त्या—यद्वा तद्वा भवत्वदः ॥ ३८८ ॥

इति ध्यात्वा ततो देवीं, भर्तुरादेशपेशला। चिन्ताव्याकुलचित्ताऽपि, रथारोहणमातनोत् ॥ ३८९ ॥

ततः सुवेगेन रथः, प्रेरितः सुमुखेन सः। काननं प्रति गच्छन्ती, पप्रच्छ रथिनं प्रति ॥ ३९० ॥

नाद्यापि वनमायाति, नानापादपसङ्कुलम्। स प्राह स्वामिनि! त्वं हि, प्रेषिता पितृसद्मनि ॥ ३९१ ॥

निशम्यैतद्वचः कर्ण,—वज्राघातसमं तदा। स्वामिनी चिन्तयामास, भुजिष्यः किं वदत्ययम् ॥ ३९२ ॥

अथवेदृग्विधं कार्य,—मनार्योचितमन्त्र च। अविचार्याऽपरीक्ष्य हि, पश्चात्तापकरं पुनः ॥ ३९३ ॥

हृदनिर्वापणकरणं, किं किरोति महीपतिः । किं वा केनापि दुष्टेना,—ऽदृष्टेन छलितो नृपः ॥ ३९४ ॥युग्मम्॥

एवं विचिन्तयन्ती सा, पाडलीखण्ड सीमनि । समेत्य तं प्रति प्राह, निवर्त्तयत्वितो भवान् ॥ ३९५ ॥

तेऽमी तुङ्गा, हि तरव,—इदं तत्पाडलीपुरम् । स्वयमेवेतः प्रयास्यामि, छललेशोऽपि नैव ते ॥ ३९६ ॥

ततो देव्याः पादपद्मं, प्रणम्य विनयेन सः । साक्षाल्लक्ष्म्यवतारे ! त्वं, क्षमस्वागः क्षितिप्रिये ! ॥ ३९७ ॥

मया परवशेनैव, चण्डालोचितकर्मणि । प्रवृत्तं पाप्मना यस्माद्, राज्ञामाज्ञा बलीयसी ॥ ३९८ ॥

सोचे सत्पुरुष ! तव, को दोषो राजशासनम् । साधयतो यतो भृत्य,—वृत्तिव्यापारशालिनः ॥ ३९९ ॥

मद्वचसा त्वया वाच्यं, राज्ञोऽग्रे भो भुवःप्रभो ! । आवयोः कुलसम्पन्न,—स्नेहयोरेकचित्तयोः ॥ ४०० ॥

आबालकालतोऽन्योन्य,—रिरंसापरवश्ययोः । त्वया कस्योचितं चक्रे, क्रूरकर्मेति साम्प्रतम् ॥ ४०१ ॥

ततोऽश्रुपातेन भुवं, सिञ्चन्तीं तां मुमोच सः । कस्मिंश्चित्पादपाभ्यर्णे, रथादुत्तार्य वर्यतः ॥ ४०२ ॥

स जोत्कारं विधायोच्चै,—र्वलले सा तरोस्तले । स्थिता प्रलापं दैवाना,—मुपालम्भांश्च तन्वती ॥ ४०३ ॥

चिन्तयन्ती स्वापराधान्, सा पाणिग्रहणादितः । इत्यादिकल्पनाजाल—परा, तस्थावधोमुखी ॥ ४०४ ॥

दध्यौ कृतापराधेव, वियोगः स्वल्पदुःखदः। अकृतागसि यस्त्याग,—स्तद्दुःखं सोढुमक्षमा ॥ ४०५ ॥
शैलसारशिलापट्ट,—परुषाग्राह्यचेतसे। क्षणरक्तविरक्ताय, पुरुषाय नमोनमः ॥ ४०६ ॥
अस्यामवस्थापन्नाया,—मम्बे ! त्वमिति वत्सले !। वियोगतापसन्तप्तां, रक्षमाऽमृतलोचने ! ॥ ४०७ ॥
अथवा याहि रे मातः !, शून्यारण्ये गरीयसि। मद्दुःखश्रुतिलोष्टैर्हृद् स्फोटो भविष्यति ॥ ४०८ ॥
जायन्ती वर्द्धयन्ती या, परिणीताऽपि पुत्रिका। जनयन्ती पितुश्चिंतां, सर्वदा दुःखकारिणी ॥ ४०९ ॥
सुपरीक्षितशीलाऽहं, नृपचेतोऽब्जभास्करी। तदत्र कोऽपि क्षुद्रस्य, सञ्चारः पोस्फुरत्य हो ! ॥ ४१० ॥
ततः पितृगृहं नैव, प्रविशामि वसामि वा। अत्रैव पुरुषो भूत्वा, स्वैरमौषधियोगतः ॥ ४११ ॥
यतो योषिज्जनः प्रायः, प्रार्थ्यः सर्वनृणामपि। सिद्धान्नवद् यत्र तत्र, प्रकृत्या सुन्दरत्वतः ॥ ४१२ ॥

यत उक्तम्—

ताम्बूलं स्त्रीकटाक्षाणि, तरुण्यः शर्वरीपतिः। पद्मा पद्माकरश्चीरं, चित्तं कस्य हरन्ति न ? ॥ ४१३ ॥
जगच्छ्लाघ्यं मया शीलं, पाल्यं लाल्यं प्रयत्नतः। विनष्टेऽस्मिन् समं नष्ट,—मैहिकामुष्मिकं फलम् ॥ ४१४ ॥

यतः—

शीलं सर्वगुणाधानं, शीलं दुर्गतिवारणम् । शीलं शाश्वतसौख्यस्य, कारणं गात्रभूषणम् ॥ ४१५ ॥

शीलं निधानं गुणरत्नराशेः, शीलं हि मूलं सुकृतद्रुमस्य ।
शीलं सदाचारविचारहेतुः, शीलं भवोत्तारणसारसेतुः ॥ ४१६ ॥

शीलप्रभावाद्विकरालकालो,–व्यालोऽपि पुष्पस्त्रजति प्रगन्धी ।
क्ष्वेडं च पीयूषति नीरराशि, र्गोपादति क्षीरति वीतहोत्रा ॥ ४१७ ॥

ततः स्वशीलरक्षार्थं, भूत्वा पुरुषवेषतः । तस्थौ पाडलिपुरतो,–ऽपाच्यां चक्रपुरोत्तमे ॥ ४१८ ॥

बिभ्रती पुष्पबटुतां, चक्रभृद्देवतालये, । श्रीमती कमलवती, मृगाक्षी कमलानना ॥ ४१९ ॥ युग्मम् ॥

इतश्चागत्य सुभगो,---नत्वा कुमरमब्रवीत् । देवीपरित्यागकथां, सकलां च सगद्गदम् ॥ ४२० ॥

ततोऽपगतमन्त्रस्य, तन्त्रस्यापि प्रभावतः । कुमारः कुरुते पश्चा,---त्तापं सन्तापदीपकम् ॥ ४२१ ॥

सा जीवति किमद्यापि, मिथ्यादोषेण दूषिता । मया पापात्मना देवी, किं गता पितृमन्दिरे ॥ ४२२ ॥

संप्रत्यहं कथं स्वप्रभो,—दर्शयिष्ये स्वमाननम् । धिग् मे कौशलतंस्य, येनैवं चिन्तितं मया ॥ ४२३ ॥

दुर्ध्यानं ध्यायतस्त्वेवं, हृत्स्फोटः किं न मेऽभवत् । किं वा जिह्वा न तुत्रोट, यया दुर्जल्पितं तदा ॥ ४२४ ॥

किं वा गगनादापतत्,—शक्रं वज्रोपमं च शतधारम् ।
किं नो पपात मूर्द्धनि, शतखण्डं येन मे न स्यात् ॥ ४२५ ॥

या कन्यमूषिका पापा, दुर्गता साऽपि निर्गता । प्रदरी दृश्यते नैव, यया मे यं विचेष्टितम् ॥ ४२६ ॥

ततः श्रीरणसिंहोऽपि, ध्यातवानसि चेतसि । किं पोऽभ्यागतनगरा, कुत्रैवं कुत्र सा गता ॥ ४२७ ॥

साऽथ सोमापुरीं गत्वा, रत्नवत्याः पुरस्तथा । समाचचक्षे न्यक्षेण, वृत्तमामूलचूलतः ॥ ४२८ ॥

श्रुत्वा संमोदसंसर्पद् दया साऽभवत्तदा । ततो गत्वा नरेशस्य, पितुरग्रे प्रभक्करा ॥ ४२९ ॥

इत्युक्त्वा प्रेषयामास,—ऽमात्यानामान् सभक्तिकान् । सिंहपार्श्वं समागत्य, ते प्रोचुर्नृपशासनम् ॥ ४३० ॥

त्वयि दत्तैकचित्तायाः, प्रीतास्यास्तव दर्शने । रत्नवत्या विवाहार्था,—गन्तव्यं कुमरस्त्वया ॥ ४३१ ॥

ततश्चाभाणि सिंहेन, नैव जानाम्यहं पुनः । सर्वार्थसाधको राजा, ज्ञाता कनकशेखरः ॥ ४३२ ॥

ततो जोत्कृत्य निर्गत्य, भूपोपान्तं समेऽगमन् । तं नत्वा विनयोपेताः, पुरुषोत्तमजल्पितम् ॥

सर्वं विज्ञपयामासुः, पुरः कनकशेखरम् ॥ ४३३ ॥ षट्पदः ॥

राजंस्तवद्य पश्यतो, चलितः कुमरोत्तमः । तद्दिनात् स्वगतस्नेहा, तस्या ध्यानेन संस्थिता ॥ ४३४ ॥

साम्प्रतं प्रेषयत्वेनं, कुमारं मारसंनिभम् । इति श्रुत्वा नृपोऽवादीत्, भागिनेयी तु सा मम ॥ ४३५ ॥

ततो भूपेन सिंहस्य, तदुक्तं भणितं तदा । स्वसुतायाः करोद्वाह,—स्तस्याः कार्यो मयैव हि ॥ ४३६ ॥

स तदादेशतः सर्वाभिसारेण बलान्वितः । शुभाहे शुभलग्ने च, प्रशस्ते विहितोत्सवे ॥ ४३७ ॥

कतिभिर्वासरैः प्राप, चक्रपूर्वाह्वकाननम् । निवेश्य वाहिनीं यावत्, स्वयं चक्रपुरोऽचले ॥ ४३८ ॥

इतश्च स्फुरितं तस्य, दक्षिणाक्षेण सत्वरम् । ततश्च तेन विज्ञातं, प्रियमेलो भविष्यति ॥ ४३९ ॥

उक्तञ्च—

शिरसः स्फुरणे राज्यं, सव्याक्षस्य प्रियागमः । दोः स्फुरणं प्रियजन—बाहुभालिङ्गनं भवेत् ॥ ४४० ॥

पुष्पाणि पुष्पबटुकः, कुमारस्य कराम्बुजे । दिव्यानि पञ्चवर्णानि, दत्त्वा मूल्यं यथेप्सितम् ॥ ४४१ ॥

लात्वा तानि महर्घ्याणि, पूज्यान् पूजयितुं तदा। सिंहः प्रवृत्ते यस्मात्, सन्तः सुचिन्तकारिणः ॥ ४४२ ॥
बटुः प्रत्यभिजानाति, भर्त्ता मे एवं सिंहराट्। पुना रत्नवती पाणि,--ग्रहणाय प्रतस्थिवान् ॥ ४४३ ॥
सिंहोऽपि प्रेप्यते दृध्यौ, विस्मयस्मेरमानसः। किमेषा कमलवती, मच्चित्तानन्ददायिनी ॥ ४४४ ॥
ततः पूजां विधायोच्चै,--र्निवृत्तः स्वाश्रये बटुम्। निमन्त्र्यातिथि भुक्त्यर्थं, पूर्वप्रेमाणुभावतः ॥ ४४५ ॥
अग्रासने निवेश्यैनं, भोजयामास भक्तितः। नानाविधाशनैः खाद्यैः, स्वाद्यैर्घोलान्तभोजनैः ॥ ४४६ ॥
ततो दिव्यानि वासांसि, नानाऽलङ्करणानि च। दापयामास तस्मै स,—भूमिदेवाय सादरम् ॥ ४४७ ॥
प्रोक्तं व्यक्तं च भो भूमिदेव! त्वां पश्यतो मम। निर्निमेषदृशौ तृप्तिं, नाप्नुतः केन हेतुना? ॥ ४४८ ॥
विप्रः पठति खल्वेवं, कस्य कोऽपि सुखप्रदः। चन्द्रोदये भवेद्वृद्धि,—भाजी वार्द्धिर्न चाऽपरः ॥ ४४९ ॥
कुमारः प्राह भो विप्र!, गन्तव्यं त्वग्रतो मम। त्वत्स्नेहपाशसम्बद्धं, नैवं गच्छति मन्मनः ॥ ४५० ॥
ततः प्रसादमाधाय, मत्सार्थे चलताद्द्विजः। मोक्तव्योऽत्र समानीय, पुनस्त्वं निश्चितं मया ॥ ४५१ ॥
विप्रः प्रोवाच भो राजन्! यक्षार्चनविधौ मम। प्रत्यूहं मा विधेहीति, भूतं मे वाचयाऽनया ॥ ४५२ ॥

पुनः प्रोवाच कुमारः, समेतव्यं त्वया किल । त्वां विना नैव गच्छामि, पादमात्रमपीत्यतः ॥ ४५३ ॥
ततोऽमात्यादिभिर्लोकै,---विज्ञाय नृपनिश्चयम् । स तथा भणितो नूनं, चचाल चतुरो यथा ॥ ४५४ ॥
कुमारो भूमिदेवेन, साद्धं क्रीडति गच्छति । भुङ्क्ते स्वपिति जागर्त्ति, करोति प्रतिबिम्बवत् ॥ ४५५ ॥
द्विजोत्तमेन तद्भाव,---भावनार्थं कदाचन । रहस्युक्तं कथं खेदं, धत्से देवीकृतेऽन्वहम् ॥ ४५६ ॥
कुमारः प्राह भूदेव !, देव्याः किं वर्णयाम्यहम् । निस्सीमरूपलावण्य,---कलाकौशलसम्पदः ॥ ४५७ ॥

किं बहुना विधिनेयं, विनिर्मिता निर्मलाऽणुदलिकगणैः ।
चन्द्रकलेव कलङ्कै, र्मुक्ता या देवतातिशया ॥ ४५८ ॥

तां विना सकलं विश्वं, शून्यं पश्यामि साम्प्रतम् । किं पुनः प्रीतिजनने, चित्तं विश्राम्यति त्वयि ॥ ४५९ ॥
द्विजेनाऽभाणि भो भूप !, मा ताम्यतां हि तत्कृते । दैवेनापहृतं सर्वं, दुष्कृतं तव साम्प्रतम् ॥ ४६० ॥
ततः प्रयाणैरच्छिन्नैः, सिंहः सोमापुरीं ययौ । चतुरङ्गचमूरागात्, संमुखः पुरुषोत्तमः ॥ ४६१ ॥
समुच्छलत्पताकौघे, समुच्छ्रितसुतोरणे । परमोत्सवेन राज्ञा सः, सोमापुर्यां प्रवेशितः ॥ ४६२ ॥

विचित्रोल्लोचसंयुक्ते, सुधाधवलितोत्तमे । प्रासादे स्थापयामास, कुमारं पुरुषोत्तमः ॥ ४६३ ॥

दैवज्ञदत्तसल्लग्ने, जाते माङ्गल्यनिःस्वने । सिंहेन रत्नवत्याश्च, वृत्तमुद्वाहमङ्गलम् ॥ ४६४ ॥

ततो हरिकरिग्राम,—पुरस्वर्णाद्यलङ्कृतीः । तदा विश्राणयामास, तस्मै श्रीपुरुषोत्तमः ॥ ४६५ ॥

कतिचिद्दिनानि तत्रास्थात्, कथाकौतूहलादिभिः । द्विजेन रत्नवत्या च, समं सौख्यं समुद्वहन् ॥ ४६६ ॥

अन्यदाऽवसरे प्राप्ते,--ऽपृच्छद् रत्नवती पतिम् । कीदृक् सा कमलवती, मृताऽपि त्वन्मनोहरो ॥ ४६७ ॥

सोऽवोचत्पूर्वमागच्छन्, त्वत्पाणिग्रहणेहया । नानामनोरथैरद्य,–निगमाद्वालितो यया ॥ ४६८ ॥

रम्भा-गौरी-रति-प्रीति,--कमलाद्या अनेकशः । या अभूवन् तकास्तस्याः, कलां नार्हन्ति षोडशीम् ॥ ४६९ ॥

ततः केनोपमानेन, तत्स्वरूपं त्वदग्रतः । निरूपयामि हे देवि !, सर्वातिशयसुन्दरम् ॥ ४७० ॥

किन्तु दुर्विधिना चक्रे, मम दुर्दैवयोगतः । आवयोर्विरहस्तेन, परिणिन्ये मया त्वकम् ॥ ४७१ ॥

स्वादिष्टं मृत्युहृद् याव,--न्नाप्यते परमामृतम् । तावत्तृषापहं वारि, नो पीयेत तृषार्दितैः ॥ ४७२ ॥

ततश्च रत्नवत्याख्यत्, सामर्षं स्वाभिमानतः । सोल्लासं प्रति पृथ्वीशं, निश्शेषनिजचेष्टितम् ॥ ४७३ ॥

यथा हि गन्धमूषायाः, प्रेषणं विट्प्रयोगतः । परपुंसः प्रवेशश्च, विद्वेषोच्चाटनादिकम् ॥ ४७४ ॥

तत्सर्वं कुमराध्यक्षं, तयाऽऽख्यातं निशम्य च । तद्दोषं तन्मुखेनैवा,--ऽङ्गीकार्य निर्वृताऽभवत् ॥ ४७५ ॥

कलङ्क-पङ्कं प्रक्षाल्य, कस्को वा नोज्ज्वलो भवेत् । तच्छ्रुत्वा रोषताम्राक्षो,--भृकुटीविकटाननः ॥ ४७६ ॥

सापराधां रत्नवतीं, निर्भर्त्स्य च ततो नृपः । मद्दृष्टिपथतो दूरं, गच्छ गच्छ विशाधमे ! ॥ ४७७ ॥

आः पापे ! किं त्वयाऽकारि ?, दुष्कृत्यं श्वपचोचितम् । विक्षेपागाढदुःखौघे, ययात्मा नरकावटे ॥ ४७८ ॥

दानमानादिभिर्नारी, मानिताऽपि स्वभावतः । आसक्तिं क्वापि नोधत्ते, स्त्रीचरित्रं हि दुस्तरम् ॥ ४७९ ॥

यत उक्तम्—

प्राप्तुं पारमपारस्य, पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां, दुश्चरित्रस्य नो पुनः ॥ ४८० ॥

नितम्बिन्यः पतिं पुत्रं, पितरं भ्रातरं क्षणात् । आरोपयन्त्यकार्येऽपि, दुर्वृत्ताः प्राणसंशये ॥ ४८१ ॥

ततोऽलीककलङ्केन, तदा निर्धाटिता मया । ततोऽपमानतो देवी, पञ्चत्वं प्राप सत्वरम् ॥ ४८२ ॥

भो भो भृत्याः ! समानीय, काष्ठानि कुरुत स्वयम् । मत्प्रासादप्रतोल्यां हि, सुसज्जां महतीं चिताम् ॥ ४८३ ॥

तत्पापमलिनात्मानं, शोधयामि निजं ततः । ज्वालाजालकरालेऽपि, चिताग्नौ सर्वसाक्षिकम् ॥ ४८४ ॥

इत्याज्ञां प्राप्य भूपस्य, भृत्यैस्तत्साधनोद्यतैः । चितां कृत्वाऽतिकृच्छ्रेण, ते सिंहाय न्यजिज्ञपन् ॥ ४८५ ॥

ततः स सपरीवारः, प्रतिषिद्धोऽपि भूपतिः । कदाग्रहग्रहग्रस्तः, प्रचचाल चितां प्रति ॥ ४८६ ॥

तदा नृपोक्तं विज्ञाय, पौरलोकैर्विडम्बिता । निकृष्टदंष्ट्रयाऽऽविष्टा, पापिष्ठा गन्धमूषिका ॥ ४८७ ॥

एतस्याश्चेष्टितं ह्येतद्,–देतन्मूढपतत्त्वरम् । इत्युदित्वा जनैः सर्वै,–र्निन्द्यमाना पदे पदे ॥ ४८८ ॥

लूनपुच्छश्रुतिद्वन्द्व,–खरारूढां विधाय ताम् । विगोप्य लोकप्रत्यक्षं, राज्ञा निर्वासिता पुरात् ॥ ४८९ ॥

यतो नारीजनोऽवध्य,–इत्यतो रणसिंहराट् । मन्त्रिसामन्तभूपाद्यै,–र्वार्यमाणो मुहुर्मुहुः ॥ ० ॥

मरणैकाग्रयरमिक,---श्चितादेशमशिश्रयत् । जातो हा हा रवोदग्रः, सर्वत्र नगरे तदा ॥ ४९१ ॥

श्वं तांशुगन्धमाल्यादि,---भूषणैर्भूषितो नृपः । कमलवत्यनुरागाद्–रक्तचित्तस्तदाऽभवत् ॥ ४९२ ॥

चितां प्रविष्टः कुमरः, पार्श्वेऽग्निः प्रगुणीकृतः । पुरुषोत्तमभूपेन, विज्ञप्तो वाडवस्तदा ॥ ४९३ ॥

भो ! तवायं परं मित्रं, त्वद्वचोलङ्घनाक्षमः । तेन त्वया तथा वाच्यो, यथा पापान्निवर्त्तते ॥ ४९४ ॥

ओमित्युक्त्वा द्विजोऽवादीत्, सस्नेहं कुमरं प्रति ।
भो ! त्वया किं समारेभे, नीचान्नीच जनोचितम् ॥ ४९५ ॥

अन्यच्च श्रीचक्रपुरा,-त्तस्थाने किमवादि माम् ? । यदहं कृतकृत्यस्त्वा,-मत्र मोक्ष्ये पुनर्द्विजः ॥ ४९६ ॥

विप्रः—

देव्यलीककलङ्का घातात्, कथं शुध्यति पाप्मनः । मलाविलं कथं वासो, मलिम्ना कज्जलाम्बुना ॥ ४९७ ॥

कुमरः—

मृताऽपि कमलवती, मयाऽनुगमनेन भोः ! । प्राप्यत इति बुद्धिस्ते, जाड्यमेव व्यनक्त्य हो ! ॥ ४९८ ॥

द्विजः—

स्वस्वकर्मेरितः प्राणी, बम्भ्रमीति निरन्तरम् । संसारे चतुरशीति,-लक्षसङ्ख्यासु योनिषु ॥ ४९९ ॥

किञ्च—

सगुणं निर्गुणं वाऽपि, कार्यजातं वितन्वता । विवेकिना परिणति,-रवधार्या प्रयत्नतः ॥ ५०० ॥

यतः—

अविमृश्यार्थकरणं, पश्चात्तापनिबन्धनम् । तस्मात्कार्यार्थिभिः कार्यं, कार्यं सद्बुद्धिपूर्वकम् ॥ ५०१ ॥

विप्रः—

कुमार! त्वं मदाख्यातं, कुरु नात्रङ्कितावहम् । रक्ष रक्ष निजप्राणान्, जीवन् भद्रशतोपदक् ॥ ५०२ ॥

यतः—

सन्धिप्रभृत्युपायौघं, सचिवास्त्यायमादरात् । यदि कुर्वन्ति राजान,—स्तेनैवैश्वर्य शालिनः ॥ ५०३ ॥

प्राणान् धारयतः सङ्गो, जातुचिन्नाम संभवेत् । प्राणत्यागे पुनर्नैवा,--वश्यं मेलापको भवेत् ॥ ५०४ ॥

कुमारः—

सप्रत्याशं महर्षेच, सिंहः प्राह द्विजं त्वया । साक्षाद् भो ! ददृशे क्वापि. जीवन्ती ध्यानतः प्रिया ॥ ५०५ ॥

इति पृष्टे द्विजः प्राह,—सावष्टम्भं वचो द्रुतम् । ज्ञातं ज्योतिष्कसारेण, ध्यानेन च समं मया ॥ ५०६ ॥

कुमार ! त्वद्दिश माऽथ, सुस्थिता विधिसंनिधौ । उपविष्टा मया दृष्टा, प्रहृष्टा गुणसम्पदा ॥ ५०७ ॥

यद्युच्यते निजात्मानं, प्रमुच्य विधिसंनिधौ । तामानयामि सत्यं चेत्कृतार्थोऽहं ततोऽभवम् ॥ ५०८ ॥

कुमारो वक्ति भूदेवा,--ऽद्यापि कार्यविलम्बनम् । किं क्रियते द्विजो वक्ति, विस्मेरः कमलाननः ॥ ५०९ ॥

राजन् ! मद्ध्यान लब्धादि, प्रसीदन्ति समाः कलाः । मद्दक्षिणां विना नैव, तेन देहीति दक्षिणाम् ॥ ५१० ॥

पुरा द्विज ! निजात्माऽस्यां, पश्चात्स्वीयं मनः पुनः । आन्तरं बहिरङ्गं च, दत्तं ते दक्षिणापदे ॥ ५११ ॥

अस्तु तावत्तवात्मादि, त्वदर्थ एव निश्चितम् । मार्गयामि यदा यद् य,--त्तत्तद्धि श्राम्यतां हि मे ॥ ५१२ ॥

एवमेवास्तु भूदेव !, घनवागडम्बरेण किम् ? । प्राणप्रियां ममानीय, हर्षोत्कर्षं कुरु द्विज ! ॥ ५१३ ॥

ततस्तिरस्करिण्यन्त,--र्विधाय मण्डलादिकम् । ध्यानालीनः सुयोगीव, तस्थावेकाग्रमानसः ॥ ४१४ ॥

अधुना दर्शनीया सा, दिष्ट्या सज्जीवनौषधी । इत्युक्ते रणसिंहस्या,--नन्दः प्रादुरभून्महान् ॥ ५१५ ॥

मृताऽप्यागच्छति ध्यानाद्,--देवी कमलवत्यहो ! । एवं सर्वं पुरं भूप,--स्तदाश्चर्यमयोऽभवत् ॥ ५१६ ॥

अहो ! अहो ! द्विजस्यास्य, माहात्म्यं ह्येकजिह्वया । कथं वर्णयितुं शक्य,--मित्यालापपरो जनः ॥ ५१७ ॥

तदाऽऽकाशाङ्गणे विद्या--धरैर्लोके च संस्थिते । पाणिपद्मं पञ्चवर्ण,--दिव्यमन्दार दामनि ॥ ५१८ ॥

कर्णा-मूलीं छादयित्वा, द्विजराजोऽभवत्तदा । सुरूपा कमलवती, कमलारूपतर्जिका ॥ ५१९ ॥

तदा विद्याधरैर्विद्याधरीभिस्त्रिदशेश्वरैः । कण्ठपीठे च तन्मूर्ध्नि च, पुष्पवृष्टिर्विनिर्ममे ॥ ५२० ॥

ततः क्षणान्तरे सिंहा, व्यपनीय परिच्छदाम् । प्रेमपूर्ण व्यलोकिष्ट, मन्यं ज्ञाता भिया मम ॥ ५२१ ॥

तुष्टेन कुमारेणैवं, लोकाध्यक्षं प्रजल्प्यत । पश्यत पश्यत भोः ! भोः !, प्रिया कमलवत्यहा ! ॥ ५२२ ॥

लावण्यसौभाग्यसणी, मण्याकर खनीनिभा । यां वीक्ष्य जनता ब्रूते, हीना रत्नवतीन्यतः ॥ ५२३ ॥

क्व रोगी ? क्व च कल्याणं ?, क्व वज्रं ? क्व च कर्करी ? ।

पुरस्तात्कमलवत्या,--स्तादृशी रत्नवत्यहा ! ॥ ५२४ ॥

ततः स्थाने कुमारेण, त्यक्त्वा रत्नवती कृतः । प्रतिबन्धस्तदेच्छेत्को, वज्रमुज्झित्य कर्करीम् ॥ ५२५ ॥

ततो राजा निजच्छत्र,--स्याधस्तात्स्नपिता मुदा । सर्वाङ्गभूषणा दिव्य,--दृष्या चक्रे सुरीसमा ॥ ५२६ ॥

ततो राजा तया सार्द्धं, भुङ्क्ते भोगाननेकशः । यथा सुरेश्वरः सार्द्धं, रम्भा-तिलोत्तमादिभिः ॥ ५२७ ॥

अथाऽप्राक्षीत्प्रियां सिंहो,--रहः कान्ते ! वटुः स च । दुःखान्यनुभवन्नस्ति, वराको विधिसन्निधौ ॥ ५२८ ॥

पश्चात्कर्णोपधीलाभ,--मुख्योदन्तनिवेदनम् । देव्या-सख्यामनश्चक्रे, स मुदा स्वामिनः पुरः ॥ ५२९ ॥

किञ्च—

कुर्वता विश्वनिर्माणं, विधिना दुष्टबुद्धिना । प्रतिपक्षयुतं वस्तु, चक्रे क्ष्वेडसुधादिवत् ॥ ५३० ॥

देवी दध्यावसौ राजा, रत्नवत्यां पराङ्मुखः । निष्प्रेमाऽतो भवेदेषोऽपवादो मे जगत्त्रये ॥ ५३१ ॥

कूटकोटि युताऽप्येषा, सापराधाऽनुशष्टिभाग । तथापि ह्युपकर्त्तव्यं, मया रत्नवतीं प्रति ॥ ५३२ ॥

यत उक्तम्—

उपकारिषु यः साधुः, साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः, स साधुः साधुरुच्यते ॥ ५३३ ॥

ततः कदाचिदानन्द,-- सये रहसि भूपतौ । स्ववरं प्रार्थयामास, प्राग्दत्तं कमलावती ॥ ५३४ ॥

अथोचे कुमरो देवि !, यत्तुभ्यं रोचतेतराम् । तत्त्वं कथय सत्वरं, यथा यच्छामि तद्वरम् ॥ ५३५ ॥

यद्येवं तावदीश! त्वं, समदृष्ट्या विलोकय । मामेनां च यतस्ते मे, कीर्त्तिर्विश्वे विजृम्भते ॥ ५३६ ॥

तया प्रेरितया चक्रे, कथमप्यनया यदि । दुष्कुलीनोचितं कर्म, राजंस्तत्क्षम्यतां मयि ॥ ५३७ ॥

निर्घृणा चञ्चला योषित्, कुशीला स्वार्थसाधना । एवं विदधती देवी, स्वापवादमपाकरोत् ॥ ५३८ ॥

अथान्यदा कुमारेण, भूपः कनकशेखरः । विज्ञप्तः सोऽनुजानाति, प्रयाणाय विवेकधीः ॥ ५३९ ॥

भूरि भूषणकल्याण,--दामदासीवरांशुकान् । दत्त्वा संमानिता पुत्री, पतिता पितृपादयोः ॥ ५४० ॥

चतुरङ्ग-चमूर्दिव्य,--वासः स्वर्णाद्यलङ्कृतीः । दत्त्वा श्रीरणसिंहोऽपि, विसृष्टः प्रणतेः पुरः ॥ ५४१ ॥

अनुज्ञाप्य च भूमीन्द्रं, प्रातिष्ठत ततः पुरात् । श्रीसिंहः सपरीवार,-श्चतुरङ्गबलान्वितः ॥ ५४२ ॥

क्रमेण पाडलीखण्ड,--सीमभूमिमवाप सः । तावत्पूर्वं सुविज्ञात,--स्वसुतादभुतसत्कथः ॥ ५४३ ॥

मत्सेनः कमलसेनः, संप्राप्तः पुनरन्तरा । अनर्घ्यो महिमानर्घ्यो, द्वात्रिंशल्लक्षणान्वितः ॥ ५४४ ॥

साधुः प्राघूर्णकस्त्वेष,--इति हेतोः स्ववेश्मनि । नीत्वा कमलसेनेन, सिंहः सन्तोषितो मुदा ॥ ५४५ ॥ युग्मम् ॥

कमलेवाऽऽश्चर्यकरी, कमलवती कमलचारुनरवदना । कतिचिद्दिना न्युषित्वा, गौरविता तेन भूपेन ॥ ५४६ ॥

कमलिन्यास्वया स्वाङ्क,--मारोप्याह्निनता तदा । आलिङ्ग्याऽऽश्वास्य तनया,--ऽनुवाच प्रेमपूर्वकम् ॥ ५४७ ॥

वत्से ! पतिपराभूता, किं नागाऽज्जनकालये ? । दुःखितायाः स्त्रिय स्त्राण,--मवश्यं पितृमन्दिरम् ॥ ५४८ ॥

संजीविताः समाः मर्त्या, मत्कुक्षिर्नैव लज्जिता । आजन्म प्रमुखं यस्या,--विज्ञानं सर्वतोमुखम् ॥ ५४९ ॥

ततश्चचाल कुमरः, प्राप्तः कनकपत्तनम् । प्राविशत्सिंहः पूर्वं, तं ऋद्ध्या कनकेश्वरः ॥ ५५० ॥

तदा पौरजनाः सर्व, मिथो जल्पन्ति वीक्ष्य तौ । हं हो ! सिंहो ह्ययं सिंह,--विक्रमे विक्रमाधिकः ॥ ५५१ ॥

सैषा कमलवत्याख्या, यद्वियोगानलार्दितः । रणसिंहश्चितां चक्रे, सुमृत्युश्चटितस्तदा ॥ ५५२ ॥

या गेया यमराजस्य, पार्श्वं निःसमशीलतः । प्रभावादद्भुताश्चर्य,--रूपा दानवदैवतैः ॥ ५५३ ॥

इति श्रुतीर्निशृण्वन्त्यस्त्यक्तारम्भा गृहाद् गृहात् । तामुद्वीक्षितुमाजग्मुः, कामिन्यः कामविह्वलाः ॥ ५५४ ॥

काश्चिदर्पणभूषण,--नेपथ्यव्यग्रपाणयः । काश्चन करग्रकेशाः, काश्चित्कज्जलभृत्कराः ॥ ५५५ ॥

रञ्जितार्द्राङ्घ्रयः काश्चि,--दर्द्धं मुक्त्वा हि काश्चन । स्वपुत्रान स्वपतीन दुग्धं, त्यक्त्वा धावन्ति काश्चन ॥५५६॥

ततः पत्न्या समं सौख्यं, भुनक्ति विषयात्मकम् । गीताशास्त्रकलाविद्या,--विनोदैर्वचनातिगैः ॥ ५५७ ॥

अन्यदा विजयपुरा,--सन्ने श्रीपार्श्वमन्दिरे । श्रीसिंहः कारयामास, विशिष्टाष्टाह्निकोत्सवम् ॥ ५५८ ॥

कर्पूरपूरैर्मृगनाभिमिश्रैः, कृष्णागुरूत्कृष्ट--तुरुष्कधूपैः ।
मन्दारपुष्पप्रकरैः सुगन्धै,--रर्चां चकाराभयदप्रभूणाम् ॥ ५५९ ॥
तद्भक्तिभङ्गी सन्तुष्टः, प्रत्यक्षीभूय यक्षराट् । आख्यातिस्त्वपितृ राज्य,--मङ्गीकुरु महाबल ॥ ५६० ॥
मयि गोप्तरि सत्यन्यः, को राज्यमधितिष्ठति । विजयसेनभूपस्य, गरीयो विक्रमावधेः ॥ ५६१ ॥
तद्वाचाऽनन्तरं सिंहो, नत्वा पार्श्वपदाम्बुजम् । संप्राप्तो विजयपुरं, सबलः स दलान्वितः ॥ ५६२ ॥
सन्मुखागमनासक्तः, पुरेशोऽल्पपरिच्छदः । कोट्टद्वारं संनिरुध्य, तस्थौ सिंहोऽपि तत्र हि ॥ ५६३ ॥
कृतान्नतृणकाष्ठाम्भो,--निरोधो रोधदुर्धरः । सिंहः सिंह इवाजेय,--विक्रमोऽभून्महीप्रभोः ॥ ५६४ ॥
ढौकेषु जायमानेषु, वासरं वासरं प्रति । यन्त्रवाहनडिंकुल्या,--गोलकोत्क्षेपणेषु च ॥ ५६५ ॥
पतितेषु च कोट्टेषु, चीयमानासु खण्डिषु । मुञ्चत्सु बाणपुञ्जेषु, वाहयत्सुहवायकाः ॥ ५६६ ॥
एवं वीरेषु कुर्वत्सु, मासैको व्यतिचक्रमे । न पुनर्वैरिणां नाशो, नो त्रासश्च मनागपि ॥ ५६७ ॥
सांनिध्यकारियक्षेण, शत्रुसेनासु दर्शितम् । शृच्यभेद्यं नभालम्बि,--ध्वान्तमञ्जनसंनिभम् ॥ ५६८ ॥
तदवेक्ष्य क्षमानाथः, प्रत्यर्थी सपरिच्छदः । भीतो गद्गदवाक् कम्प्र,--देहो नंष्ट्वा गतः क्वचित् ॥ ५६९ ॥

शीघ्रं प्रविष्टः कोट्टे षु, तुष्टोऽथ रणसिंहराट् । दानवानां जयं कृत्वा, सुत्रामेव स्वर्गाविशत् ॥ ५७० ॥

सामन्तमण्डलाधीशो,--विजयसेनस्य भूपतेः । पट्टेऽभिषिक्तः श्रीपाण्डोः, पट्टे यद्वद् युधिष्ठिरः ॥ ५७१ ॥

आज्ञामार्गप्रतेजस्कां, न्यायवल्ल्येकमण्डपः । आचार्द्धि वर्त्तयामास, शासनं दुष्टशासनम् ॥ ५७२ ॥

दुर्जनजनसंसर्गं, त्यजतितरां सज्जनस्य संसर्गम् । कुरुते करुणासागर,--सप्तव्यसनोज्झितः सिंहः ॥ ५७३ ॥

पूजां श्रीयक्षराजस्य, यात्रां च महिमां तथा । प्रकटीचकार लोकेषु, कृतज्ञः श्रीनरेश्वरः ॥ ५७४ ॥

अष्टाहिता अष्टदिनादि यावद्, अष्टाह्निकाः पार्श्वजिनालये सः ।

प्रावर्त्तयत्पुण्यतराः प्रभूत,--मेतन्मयाऽऽप्तं फलमव्ययाप्यम् ॥ ५७५ ॥

अथैकदा पुरासन्न,--ग्रामादर्जुननामकः । कौटुम्बिकः समागच्छन्, क्षुधोदन्या प्रपीडितः ॥ ५७६ ॥

पुष्पितं फलितं स्वच्छं, वृक्षं ), वीक्ष्य हृष्टोऽभवत्पथि । गवेषितोऽपि तत्स्वामी नो दृष्टो निकटे क्वचित् ॥ ५७७ ॥

ततो द्विगुणितं मूल्यं, मुक्त्वा तत्रैव तेन हि । स्वकोटं चिर्भटं क्षिप्तं, दर्शनात्क्षुत्प्रणोदकम् ॥ ५७८ ॥

भक्षयिष्ये पुरं गत्वा, विचिन्त्येदं ततोऽचलत् । तावच्छ्रेष्ठीशपुत्रस्य, चिच्छेद केनचिच्छिरः ॥ ५७९ ॥

निन्ये तत्रान्यतः शेषं, संवरं तत्र संस्थितम् । ददृशे परितः पौरै,—र्हाहारवोऽभवन्महान् ॥ ५८० ॥
उत्क्षिप्ततीक्ष्ण खड्गौघैः, पुराध्यक्षैर्दधाविरे । अर्जुनस्तत्र तत्पश्यन्, दुर्जनैरिव तैर्धृतः ॥ ५८१ ॥
प्रोक्तं किमस्ति त्वत्क्रोडे, इत्युवाच सचिर्भटम् । किमेतासौ धिरीधारा, यावदेवमितस्ततः ॥ ५८२ ॥
प्रलोकयन्ति ते तावद्, दृष्टं तत्सुतमस्तकम् । ततो बद्ध्वार्जुनो नीतो,ऽमात्यान्ते यमसंनिभे ॥ ५८३ ॥
तैरुक्तं किमरे दुष्ट !, रे पापिष्ठशिरोमणे ! । बालो निरपराधोऽयं, प्रापितो हीदृशीं दशाम् ॥ ५८४ ॥
अर्जुनः प्राह भो मन्त्रिन् !, न जानेऽहं किमप्यहो ! । घटते च पुना राजा, पृष्टोऽपि तदुवाच सः ॥ ५८५ ॥

**राजा—**

घटते घटते रे रे !, किं जल्पसि पुनः पुनः । व्यक्तं प्रश्नोत्तरं किं नो, वक्ति रे पारमार्थिकम् ॥ ५८६ ॥
अर्जुनो वक्ति भो राज,-न्नीदृशीं विदशां गते । सत्यभाषिणि लोकेऽपि, भवेत्कः प्रत्ययस्तव ॥ ५८७ ॥
जनाननात्ततस्तस्य, ज्ञात्वाशीलंच भूभुजा । मुक्तः सम्प्रति यद्भाव्यं, न जाने कर्मणः फलम् ॥ ५८८ ॥
ततस्त्वारक्षमुख्येन, लपितं दुष्ट! धृष्ट! रे ? । पाणिसंस्थितसद्यस्क,-कर्त्तितोत्तमविग्रहः ॥ ५८९ ॥

मूढ! जल्पसि किं चैव,--मनृतं मृत्युदायकम् । लोकद्वयविरुद्धं च, दुर्गत्यध्वनि दीपकम् ॥ ५९० ॥
राज्ञाऽऽदिष्टस्तलारोऽथ, वध्यभूमौ तमर्जुनम् । सर्वाङ्गकृतवध्याभं, शैलोपान्तं निनाय तम् ॥ ५९१ ॥
तावता तत्र कोऽप्येको, विकरालोऽतिकालरुक् । दारुणः पुरुषोऽकस्मा,-दुपतस्थे भयानकः ॥ ५९२ ॥
तेनोचे भोः पुरीरक्षा,यद्येनं मारयिष्यथ । सकलानपि रे युष्मान्, मारयिष्याम्यहं तदा ॥ ५९३ ॥
उक्तिप्रत्युक्तितस्तेषां, संजातः सत्यसङ्गरः । एकेनैव जिताः सर्वे, विष्णुनेव सुरारयः ॥ ५९४ ॥
ततः प्रणश्य भूपाला,--राज्ञः शरणमागताः । सिहेशं कथयामासु,--र्वीतवृत्तान्तमादितः ॥ ५९५ ॥
श्रुत्वा क्रोधारुणो राजा, भृकुटी भीषणाननः । सर्वां युद्धादिसामग्रीं, विधाय निरगात्पुरात् ॥ ५९६ ॥
ततः सर्वाभिसारेण, युध्यमानस्य भूपतेः । तेन सार्द्धं मगात्कालो, भूयिष्ठः शिष्टनीतितः ॥ ५९७ ॥
कुन्तासिबाणनाराच,--चक्रकोदण्डतोमरैः । सल्लक्ष्या अपि निर्लक्ष्याः, संजज्ञुस्तं प्रति प्रभोः ! ॥ ५९८ ॥
ततः श्रीरणसिहेन, ज्ञातं नैष पुमानहो ! । देवो वा दानवो वाऽपि, यक्षो वा राक्षसोऽथवा ॥ ५९९ ॥
गन्धाढ्यधूपहस्तेन, भूपेनाभाणि सुन्दर ! । अज्ञातपरमार्थस्य, दोषो, मे नात्र कश्चन ॥ ६०० ॥

यः कश्चिदसि भो ! अत्र, प्रत्यक्षीभूय तत्त्वतः । कथ्यतां निजमाहात्म्यं, सन्देहध्वान्तभास्करम् ॥ ६०१ ॥

नम्राङ्गीभूय तेनोचे, शृणु तावन्नरोत्तम ! । स्वविक्रमेण विश्वेऽस्मि,- न्नजेयोऽहं पुनर्हरेः ॥ ६०२ ॥

नाम्नाऽहं दुष्षमाकालः, कलिं प्राहुर्जना मम । साम्राज्यं भारते क्षेत्रे, एकच्छत्रं च सम्प्रति ॥ ६०३ ॥

प्रागामोच्छी महावीरो, महावीरं मम द्विषन् । पक्षैरेकोननवत्या, सिद्धिं प्राप्तस्य तस्य हि ॥ ६०४ ॥

साम्प्रतं जयति राज्यमजय्यं, मामकीनमिह भारतवर्षे ।

शिक्षिताऽस्खलिततेजसा मया, कर्षको ह्ययमतीवनीतिमान् ॥ ६०५ ॥

मदाज्ञालङ्घनोन्मत्त,-श्चिर्भटं यत्तदाऽग्रहीत् । विमुच्य मूल्यशून्येऽस्मिन्, कच्छे द्विगुणितं तदा ॥ ६०६ ॥

मम त्वं पश्यतोहर्त्ता, प्रतिभासि यदीदृशम् । कृतवानित्युदित्वाऽथ, क्रोडे चिर्भटमीक्षितम् ॥ ६०७ ॥

यावत्पौरा राजलोकाः, पश्यन्तः सन्ति तावता । उत्थाय श्रेष्ठिसूः सोऽपि, प्रागात्सज्जशिरा गृहात् ॥ ६०८ ॥

वयस्यैः स्वजनैः पौरैः,— राश्चर्यं वीक्ष्य विस्मितैः । हृष्टेन भूभुजाऽप्येषः स्वाङ्कमारोप्य संस्तुतः ॥ ६०९ ॥

अर्जुनस्यापि भूपेन, सर्वालङ्कारदानतः । प्रसादो विहितो न्याय, -सारेण प्राप्तकीर्त्तिना ॥ ६१० ॥

विश्वाध्यक्षमथोवाच, कलिकालनराधिपः । ऊर्ध्वीकृत्य स्वदोर्दण्डं, स्वौजः स्फूर्तिपराक्रमान् ॥ ६११ ॥

तद्यथा—( हरिणीप्लुतं छन्दः )

अनृतपटुता चौर्यं, चित्तं मतामपमानता, मतिरविनयो धर्मं, शाठ्यं गुरुष्वपि वञ्चना ।

ललितमधुरा वाक् प्रत्यक्षं परोक्षविघातिनी, कलियुगमहाराजस्यैताः स्फुरन्ति विभूतयः ॥ ६१२ ॥

शाकिनीमन्त्रतुल्योऽसौ, व्यवहारः कलौ युगे । तरन्त्यसाधवो यत्र, निमज्जन्ति च साधवः ॥ ६१३ ॥

ये कुर्वन्ति जनाः प्रियाणि सततं सर्वस्य हेतुं विना, ते निष्कारणबान्धवा विरलतां जाताः कलौ साधवः ।

क्षुद्रैः स्वार्थपरैरपेतसुकृतैर्मायाविभिर्निष्ठुरैः, प्राप्युद्धं गविधातृभिः खलजनैर्व्याप्तं जगत्सांप्रतम् ॥ ६१४ ॥

न देवे देवत्वं कपटपटवस्तापसजनाः, जनो मिथ्याभाषी विरलतर वृष्टिर्जलधरः ।

प्रसङ्गो नीचानामवनिपतयो दुष्टमतयः, जनाः शिष्टा नष्टा अहह ! कलिकालव्यतिकरः ॥ ६१५ ॥

धर्मः पर्वगतस्तपः कपटितं सत्यं च दूरे गतं, पृथ्वी मन्दफला नृपाः सुकुटिला द्रव्यार्जने व्यसना ।

लोकः स्त्रीवशतः स्त्रियोऽतिचपला लोभैकमज्जा द्विजाः,
साधुः सीदति दुर्जनः प्रभवति प्रायः प्रविष्टःकलिः ॥६१६॥

सर्वत्राद्भुतकन्दला वसुमती बुद्धिर्जडाना परा, जातं निःकमल जगन्मुमलिनैर्लब्धा घनैरुन्नतिः।
सर्पन्ति प्रतिमन्दिरं द्विग्मनाः संत्यक्तमार्गो जनो,--वर्णाणां च कलेश्च संप्रति जयन्त्येकैवर राज्यस्थितिः ॥६१७॥
इत्यादि।

एवं तावन्निजां स्फूर्त्तिं, सौवराज्यस्थितिं तथा। प्रकाश्य रणसिंहस्य, भूपस्य पुरतः पुनः ॥ ६१८ ॥
स्तोकमात्राऽपि मे आज्ञा,--ऽतिक्रमो मा करिष्यसि। इत्युदित्वा छलित्वाऽथ, कलिभूपस्तिरोदधे ॥ ६१९ ॥
कलिनोक्तं वचश्चित्ते, धारं-धारं धराधिपः। यथागतोऽर्जुनो लोकाः, सर्वे स्वस्थानमाश्रिताः ॥ ६२० ॥
न कोऽपि तल्लङ्घयितुं, क्षमापीठे क्षमोऽस्ति भोः !। देवो विद्याधरो वाऽपि, दानवो मानवोऽथवा ॥ ६२१ ॥
ततो भूवल्लभो नीतौ, विपरीतमना अभून्। राज्यं प्रपालयामास, पैत्र्यं पूर्ववदुत्कटम् ॥ ६२२ ॥
खलन्ति पिशुनास्तस्य, शासनं यमशासनम्। नीचानां दुर्वचोबाणा,--लगन्ति श्रवणे प्रभोः ! ॥ ६२३ ॥

तदादि निखिलो लोको,--ऽध्येतुं प्रववृते न्विदम् । कुम्भवन्मर्ववृत्तोऽपि, विदग्धो रागवानपि ॥
ग्रहीतुं शक्यते केन, पार्थिवः कर्णदुर्बलः ॥ ६२४ ॥ षट्पदः श्लोकः

अविवेकिनि भूपाले, करोत्याशां समृद्धये । योजनानां शतं गन्तुं, करोत्याशां समृद्धये ॥ ६२५ ॥

ततो राजसु पौरेषु, कलिराजविजृम्भितम् । दृष्ट्वा भूमीभुजश्चित्तं विरक्तमभवद् भवात् ॥ ६२६ ॥

ततश्च समयं ज्ञात्वा, समागाद् गोपमातुलः । श्रीमज्जिनदासगणि,--महामुनिशिरोमणिः ॥ ६२७ ॥

श्रीविजयपुरोद्याने, स्थण्डिले स्थावरत्रसैः । जन्तुभिर्वर्जिते सोऽस्था,--दनुज्ञाप्य स्थिराशयः ॥ ६२८ ॥

इतश्चोद्यानपालेन, विज्ञप्तो भूपतिस्तदा । देवाद्यजिनदासर्षि,--रुद्याने समवासरत् ॥ ६२९ ॥

प्रीतिं प्राप्तेन भूपेन, तस्मै दानमदायि च । विमुच्य राजचिह्नान्य,--लङ्कारांश्च धनानि च ॥ ६३० ॥

ततश्च सपरीवारो, राजपौर जनान्वितः । दशार्णभद्रवद्वीरं, वन्दितुं तं धराधवः ॥ ६३१ ॥

प्रतस्थे परयाभक्त्या,--ऽद्वितीयद्ध्या पराऽऽभया । दानादिकं वितन्वानः, प्रापोद्यानं मनोरमम् ॥ ६३२ ॥

तं त्रिःप्रदक्षिणीकृत्य, पञ्चाभिगमपूर्वकम् । निषसाद यथास्थानं, नृपस्तद्वक्त्रदत्तदृक् ॥ ६३३ ॥

राजरङ्क समोरस्क,--स्तृणस्त्रैणसमानधोः । मुनिर्धर्माशिषाऽऽसंश्या,--ऽऽरब्धवान् धर्मदेशनाम् ॥ ६३४ ॥

तथाहि—

अस्मिन्नसारे संसारे, भविनां भ्रमतां मिथः । युग्मजानामपि प्रायः, सुखदुःखोदयः पृथक् ॥ ६३५ ॥

सुखसाधनं हि सुकृतं, दुष्कृतं दुःखमाधनम् । विभाव्येदं सुखाकाङ्क्षी, प्राणी धर्मं समाचरेत् ॥ ६३६ ॥

समये समये प्राणी, भावेन येन येन हि । प्रवेशं कुरुते तेन, तेन बन्धः शुभाशुभः ॥ ६३७ ॥

आश्रवद्वाररोधेन, शुभं कर्मार्जयेज्जनः । अशुभं वैपरीत्येन, इति प्रोक्तं जिनागमे ॥ ६३८ ॥

प्राणिहिंसा--मृषावादा,--ऽदत्ताऽ-ब्रह्म-परिग्रहाः । पञ्चैते आश्रवा ज्ञेयाः, स्थगितव्याः प्रबन्धतः ॥ ६३९ ॥

प्रवाहैः पूर्यते जीव,--सरसी पापवारिभिः । स्थगितेष्वेतेषु तदा--ऽनागमः प्राक्तनक्षयः ॥ ६४० ॥

वत्स ! एषोऽस्त्यभिप्राय,--स्तव चेतसि वर्त्तते । आश्रवद्वाररोधेन, पापं पुण्यं विपर्ययात् ॥ ६४१ ॥

तद् दुष्कलिपिशाचेन, छलितश्छगितोऽथवा । किं वा दुर्मित्रसंसर्गा,--न्मन्ये चित्तं चलाचलम् ॥ ६ २ ॥

श्वेतं वस्तु समं पीतं, विपर्यासेन पश्यति । यथा कनकबीजस्य, भक्षणान्मानवो भृशम् ॥ ६४३ ॥

यद्वा तिमिरदोषेण, दृष्टश्चन्द्रमसो युगम् । दरिदर्ष्टि तथा वत्स !, तवास्ते धीविपर्ययः ॥ ६४४ ॥
एवं कलिभूपभिया, स्वार्थं चेत्त्वं त्यजिष्यसि । तथापि स्यादघं मृत्युं, द्वयमप्यवितर्कितम् ॥ ६४५ ॥
क्रीडया क्रियमाणाऽपि, हिंसा दुर्गतिदायिनी । प्राणनाशकरं क्ष्वेडं, यथात्तं खाद्यमिश्रितम् ॥ ६४६ ॥
इत्याद्युपदेशसुधां, पायं-पायं श्रवःपुटैः । मिथ्यात्विपं तदा नेशे, रणसिंहमहीक्षितुः ॥ ६४७ ॥
विज्ञाय धर्माभिमुखं, भूपतिं मुनिनोदितम् । पितुर्विजयसेनस्य,–र्वचांसि शृणु तत्परः ॥ ६४८ ॥
कलिविद्धं पिता तेन, प्राप्तेन स्वगुणादथ । धर्मदामाभिधानेन, जगज्जनहितैषिणा ॥ ६४९ ॥
स्वर्गं यियासुना पुत्र,–प्रतिबोधनहेतुतः । चक्रेऽनागतमेव श्री,–उपदेशस्य मालिका ॥ ६५० ॥

**तद्वर्णिकामात्रं यथा—**

भद्दो विणीयविणओ, पढमगणहरो समत्तसुयनाणी । जाणंतोवि तमत्थं, विम्हिय हियओ सुणइ सव्वं ॥ ६५१ ॥
जं आणवेइ राया, पइयओ तं सिरेण इच्छंति । इय गुरुजणमुहभणियं, कयंजलिउडेहिं सोयव्वं ॥ ६५२ ॥
जो कुणइ अप्पमाणं, गुरुवयणं न लएइ उवएसं । सो परिहाइ परभवे, जहा महापीढ पीढरिसी ॥ ६५३ ॥

जो गिण्हइ गुरुवयणं, भन्नंतं भावओ विसुद्धमणो। ओसहमिव पिज्जंतं, तं तस्स सुहावहं होइ॥ ६५४॥
अभिगमणवंदणनमं,--सणेण पडिपुच्छणेण साहूणं। चिरसंचियंपि कम्मं, खणेण विरलत्तणमुवेइ॥ ६५५॥
भवसयसहस्सदुलहे, जाइजरामरणसागरुत्तारे। जिणवयणंमि गुणायर!, खणमवि मा काहिसि पमायं॥ ६५६॥
विजया गणिनी राज्ञो, माता तत्राजगाम सा। समयज्ञायतो द्वेधा, महासत्याः शिरोमणिः॥ ६५७॥
आहोपदेशमालैषा, प्रस्तावं प्राप्य तं प्रति। अध्येतव्या त्वया वत्सा,--ऽऽमूलात्स्वर्गशिवर्द्धये॥ ६५८॥
ततः सिंहेन साऽधीता, जिनदासमहर्पितः। भाविभद्रवतां नृणां, दुष्करं किं नु धीमताम्॥ ६५९॥
पौनःपुन्येन तस्याश्च, परावर्त्तनतस्ततः। नव्योपदेशपीयूष,--भावितात्मा नृपोऽभवत्॥ ६६०॥
ततः कमलवत्यङ्ग,--जन्मानं शुभवासरे। राज्येऽभिषिच्य समये, विहायाहिमिव श्रियम्॥ ६६१॥
श्रीमुनिचन्द्रसूरीणां, पार्श्वे जग्राह संयमम्। प्रपाल्य निरतीचारं, प्रक्षाल्य निजकश्मलम्॥ ६६२॥
आराधनां समाराध्य, ध्यानमौनसमन्वितः। स्वर्गलोकेषु देवत्वं, संप्राप्य क्रमतः शिवम्॥ ६६३॥
देवीकमलवत्यङ्ग,--प्रसूतेनाप्यपाठि सा। तदुक्तार्थसुधासेक,--संप्रीयन्नन्तरात्मना॥ ६६४॥

ततः परं चतुर्वर्ण,-- मङ्गं नानघचेतसा । पापठ्यमाना मद्‌बुद्ध्या प्राप्तेयं तमनेहसम् ॥ ६६५ ॥

यावच्चन्द्रदिवानाथौ, दीव्यन्तौ दिवि निष्ठतः । यावन्मेरुस्तावदेषा, जयताज्जगतीतले ॥ ६६६ ॥

## । अथ प्रशस्तिः ।

तीर्थे श्रीवर्द्धमानस्य सुधर्मा गणधोऽभवत् । तदन्वये वज्रकायो, वज्रस्वाम्यभवद्गुरुः ॥ ६६७ ॥

चान्द्रे कुले तच्छाखाया, सूरिरुद्योतनाभिधः । तत्पट्टे श्रीवर्द्धमानो वर्द्धमानमुनीश्वरः ॥ ६६८ ॥

खरतरेति संप्राप्त,—विरुदो नृपपर्षदि । श्रीजिनेश्वर सूरीन्द्रो -ऽभयदेव गुरुस्ततः ॥ ६६९ ॥

बोधिताचण्डचामुण्डः, सूरि श्रीजिनवल्लभः । नताखिलामर्त्यमर्त्यः श्रीजिनदत्त सूरिराट् ॥ ६७० ॥

भालस्थलोद्यन्नृमणिः, श्रीजिनचन्द्रसूरिराट् । षट्त्रिंशद्वादजेताऽभू,—ज्जिनपत्तियतीश्वरः ॥ ६७१ ॥

तद्वंशे विश्वविख्यात॰, सार्वसिद्धान्तपारगः । संख्यातीतगुणग्रामः, गौतमप्रतिमः प्रभुः ॥ ६७२ ॥

आदेयवचनो भूभृद्वन्द्यः सूरिशिरोमणि । श्रीजिनभद्रसूरीन्द्रो—ऽभवद् भद्रङ्करः सताम् ॥ ६७३ ॥

तत्पट्टोदयशैले दिनेशलीलाधरो यको जज्ञे । स श्रीजिनचन्द्रगुरुः, सतां तमःस्तोमहरण परः ॥ ६७४ ॥

तत्पट्टोद्योतकरः, खरतरगणनायकोऽधुना विजयी। श्रीजिनसमुद्रसूरिः, समुद्रवद् रत्नराशिनिधिः ॥ ६७५ ॥

ग्यासदीनसुरत्राण,– गोष्ठ्यामजैत्रपत्रकाः। शिष्याः श्रीजिनभद्राणां, सिद्धान्तरुचिवाचकाः ॥ ६७६ ॥

तदन्तेवासिलेशेन, रणसिंहकथाप्रथा। गणिनामुनिसोमेन, चिरन्तनकथानुगा ॥ ६७७ ॥

वाचनाचार्यचर्यस्य हेमध्वजगणेर्गुरोः। अभ्यर्थनाविशेषेण, चक्रेमुक्तिनिबन्धना ॥ ६७८ ॥

मतिमान्द्यादिहासत्यं, लक्षणाच्छन्दसोऽतिगम्। सद्भिः शोध्यं बुद्धिमद्भि,– स्तत्कृत्वा मय्यनुग्रहम् ॥ ६७९ ॥

सितपत्रस्थलदुर्गे, श्रीवीरस्वामिनः प्रसादेन। तोलाकारितशाला,– स्थितेन चैषा समर्थितराम् ॥ ६८० ॥

॥ इति श्रीरणसिंहचरितं समाप्तम् ॥

संवत् १५४० वर्षे श्रीवैशाखसुदि अक्षिनतृतीयादिने श्रीरणसिंहकथा कृता

वा॰मुनिसोमगणिनेति वाच्यमाना चिरं जयतात् ॥

शुभं भवतु लेखक-पाठक-व्याख्यातृणां श्रोतृणां चेति।

